लाभालाभौ समौ भूत्वा निर्ममः। शुक्लतेजोमयं ब्रह्म इति

श्रुत्यनुरोधेन शुक्लध्यानपरायणोऽध्यात्मनिष्ठः स्वातिरिक्तप्रपञ्चनि-

సంన్యస్య పూర్ణానన్దైకబోధః

యజ్జాగ్రజ్జాగ్రదాదిచతుష్పఞ్చదశకలనాపహ్నవ-సిద్ధం

తద్బ్రహ్మాహమస్మీతి బ్రహ్మప్రణవమనుస్మరన్ భ్రమరకీటన్యాయేన

శరీరత్రయతన్నిరూపితాత్మాత్మీయాభిమతిముత్సృజ్య యః స్వాతిరిక్తాస్తిత్వభ్రమ-

इत्युपनिषच्छब्दः तृतीयोपदेशसमाप्त्यर्थः॥ ८९-९१॥

इति तृतीयोपदेशः

चतुर्थोपदेशः

यतिधर्माणां तत्फलस्य चोपन्यासः

त्यक्त्वा लोकांश्च वेदांश्च विषयाणीन्द्रियाणि च।

आत्मन्येव स्थितो यस्तु स याति परमां गतिम्॥ १॥

नामगोत्रादिवरणं देशं कालं श्रुतं कुलम्।

वयो वृत्तं व्रतं शीलं ख्यापयेन्नैव सद्यतिः॥ २॥

न संभाषेत् स्त्रियं कांचित् पूर्वदृष्टां च न स्मरेत्।

कथां च वर्जयेत्तासां न पश्येल्लिखितामपि॥ ३॥

एतच्चतुष्टयं मोहात् स्त्रीणामाचरतो यतेः।

चित्तं विक्रियतेऽवश्यं तद्विकारात् प्रणश्यति॥ ४॥

तृष्णा क्रोधोऽनृतं माया लोभमोहौ प्रियाप्रिये।
शिल्पं व्याख्यानयोगश्च कामो रागः परिग्रहः॥ ५॥

अहंकारो ममत्वं च चिकित्सा धर्मसाहसम्।
प्रायश्चित्तं प्रवासश्च मन्त्रौषधगराशिषः।
प्रतिषिद्धानि चैतानि सेवमानो व्रजेदधः॥ ६॥

आगच्छ गच्छ तिष्ठेति स्वागतं सुहृदोऽपि वा।
संमाननं च न ब्रूयान्मुनिर्मोक्षपरायणः॥ ७॥

प्रतिग्रहं न गृह्णीयान्नैव चान्यं प्रदापयेत्।
प्रेरयेद्वा तथा भिक्षुः स्वप्नेऽपि न कदाचन॥ ८॥

जायाभ्रातृसुतादीनां बन्धूनां च शुभाशुभम्।
श्रुत्वा दृष्ट्वा न कम्पेत् शोकमोहौ त्यजेद्यतिः॥ ९॥

अहिंसा सत्यमस्तेयब्रह्मचर्यापरिग्रहाः।
अनौद्धत्यमदीनत्वं प्रसादः स्थैर्यमार्जवम्॥ १०॥

अस्नेहो गुरुशुश्रूषा श्रद्धा क्षान्तिर्दमः शमः।
उपेक्षा धैर्यमाधुर्ये तितिक्षा करुणा तथा॥ ११॥

ह्रीस्तथा ज्ञानविज्ञाने योगो लघ्वशनं धृतिः।
एष स्वधर्मो विख्यातो यतीनां नियतात्मनाम्॥ १२॥

निर्द्वन्द्वो नित्यसत्त्वस्थः सर्वत्र समदर्शनः ।
तुरीयः परमो हंसः साक्षान्नारायणो यतिः ॥ १३ ॥

एकरात्रं वसेद् ग्रामे नगरे पञ्चरात्रकम् ।
वर्षाभ्योऽन्यत्र वर्षासु मासांश्च चतुरो वसेत् ॥ १४ ॥

द्विरात्रं न वसेद् ग्रामे भिक्षुर्यदि वसेत्तदा ।
रागादयः प्रसज्येरंस्तेनासौ नारकी भवेत् ॥ १५ ॥

ग्रामान्ते निर्जने देशे नियतात्मानिकेतनः ।
पर्यटेत् कीटवद् भूमौ वर्षास्वेकत्र संवसेत् ॥ १६ ॥

एकवासा अवासा वा एकदृष्टिरलोलुपः ।
अदूषयन् सतां मार्गं ध्यानयुक्तो महीं चरेत् ॥ १७ ॥

शुचौ देशे सदा भिक्षुः स्वधर्ममनुपालयन् ।
पर्यटेत सदा योगी वीक्षयन् वसुधातलम् ॥ १८ ॥

न रात्रौ न च मध्याह्ने संध्ययोर्नैव पर्यटन् ।
न शून्ये न च दुर्गे वा प्राणिबाधाकरे न च ॥ १९ ॥

एकरात्रं वसेद् ग्रामे पत्तने तु दिनत्रयम् ।
पुरे दिनद्वयं भिक्षुर्नगरे पञ्चरात्रकम् ॥
वर्षास्वेकत्र तिष्ठेत स्थाने पुण्यजलावृते ॥ २० ॥

आत्मवत् सर्वभूतानि पश्यन् भिक्षुश्चरेन्महीम्।
अन्धवज्जडवच्चैव बधिरोन्मत्तमूकवत्॥ २१॥

स्नानं त्रिषवणं प्रोक्तं बहूदकवनस्थयोः।
हंसे तु सकृदेव स्यात् परहंसे न विद्यते॥ २२॥

मौनं योगासनं योगस्तितिक्षैकान्तशीलता।
निःस्पृहत्वं समत्वं च सप्तैतान्येकदण्डिनाम्॥ २३॥

परहंसाश्रमस्थो हि स्नानादेरविधानतः।
अशेषचित्तवृत्तीनां त्यागं केवलमाचरेत्॥ २४॥

त्वङ्मांसरुधिरस्नायुमज्जामेदोऽस्थिसंहतौ।
विण्मूत्रपूये रमतां क्रिमीणां कियदन्तरम्॥ २५॥

क्व शरीरमशेषाणां श्लेष्मादीनां महाचयः।
क्व चाङ्गशोभासौभाग्यकमनीयादयो गुणाः॥ २६॥

मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतौ।
देहे चेत् प्रीतिमान् मूढो भविता नरकेऽपि सः॥ २७॥

स्त्रीणामवाच्यदेशस्य क्लिन्ननाडीव्रणस्य च।
अभेदेऽपि मनोभेदाज्जनः प्रायेण वञ्चते॥ २८॥

चर्मखण्डं द्विधा भिन्नमपानोद्गारधूपितम्।
ये रमन्ति नमस्तेभ्यः साहसं किमतः परम्॥ २९॥

न तस्य विद्यते कार्यं न लिङ्गं वा विपश्चितः।
निर्ममो निर्भयः शान्तो निर्द्वन्द्वोऽवर्णभोजनः॥ ३०॥

मुनिः कौपीनवासाः स्यान्नग्नो वा ध्यानतत्परः।
एवं ज्ञानपरो योगी ब्रह्मभूयाय कल्पते॥ ३१॥

लिङ्गे सत्यपि खल्वस्मिन् ज्ञानमेव हि कारणम्।
निर्मोक्षायेह भूतानां लिङ्गग्रामो निरर्थकः॥ ३२॥

यं न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम्।
न सुवृत्तं न दुर्वृत्तं वेद कश्चित् स ब्राह्मणः॥ ३३॥

तस्मादलिङ्गो धर्मज्ञो ब्रह्मव्रतमनुव्रतम्।
गूढधर्माश्रितो विद्वानज्ञानचरितं चरेत्॥ ३४॥

संदिग्धः सर्वभूतानां वर्णाश्रमविवर्जितः।
अन्धवज्जडवच्चापि मूकवच्च महीं चरेत्॥ ३५॥

तं दृष्ट्वा शान्तमनसं स्पृहयन्ति दिवौकसः।
लिङ्गाभावात्तु कैवल्यमिति ब्रह्मानुशासनम्॥ ३६॥

इति॥

ब्रह्मातिरिक्तास्तिताहेतुधर्मपूगत्यागपूर्वकं ब्रह्ममात्रसिद्धिताहेतु-

ఇత్యన్తేన। కదాచిత్ కేనచిదపి స్వస్య నామగోత్రాదివరణమ్। స్వపతనహేతుభూతం

రాగతః స్త్రీసంభాషణస్మరణతత్కథాలాపచిత్రస్థవనితాదర్శనాదికం యతినా

త్యాజ్యమిత్యాహ- నేతి। కించ ఇదం మే స్యాత్ ఇదం మా భూత్ ఇతి తృష్ణా। మాయా

పరవఞ్చనా। అనాత్మశాస్త్రవ్యాఖ్యానయోగశ్చ। ఆరామాలయాది-

स्वनिकटमागतम् आगच्छेति। कदापि प्रतिग्रहं न गृह्णीयात्। यदि कदाचित्

जायादीनां शुभाशुभं श्रुत्वा दृष्ट्वा न कम्पेत्। तद्विषयकशोकमोहौ

त्यजेद्यतिः। यतेः स्वधर्ममाह- अहिंसेति। क्षान्तिः सहनम्। यदृच्छया

लघ्वशनम्। एवं धर्मपूगसंस्कृतो योगी नारायणो भवतीत्याह-

निर्द्वन्द्व इति। यदि श्रवणध्यानादिव्यापृत्युपरतस्तदा एकरात्रमिति।

ग्रामैकरात्रस्थितावपि ग्रामान्त इति। परमहंसोऽवधूतो वा

यथेच्छाचरणतः सन्मार्गदूषणं न कुर्यात् इत्याह- एकवासा इति।

अलोलुपः सर्वत्र लौल्यवर्जितः। प्राण्यहिंसार्थं वीक्षयन्निति।

संचारप्रतिषेध-कालदेशावाह- नेति। शून्ये निर्मानुष्ये। ग्रामादौ

वासकालमाह- एकरात्रमिति। चातुर्मास्यानन्तरम् आत्मवदिति। यथा

अन्धादिः रूपादिभेदं न पश्यति तथेत्यर्थः। वन्यादीनां स्नाननियममाह- स्नानमिति। परमहंससेवनीयध्र्मः क इत्यत्र-

मौनमित्यादि। वागादिकरणव्यापृतिराहित्यमेव मौनम्। योगानुकूल-

పరహంసేతి। స్నానం మనోమలత్యాగః ఇతి శ్రుతేః। దేహరతేః కృమిసామ్యమాహ-

स्त्रीणामिति। लिङ्गाद्यपेक्षया ज्ञानस्य प्राधान्यं विदुषः कृतकृत्यतां

चाह- न तस्येति। ब्रह्ममात्रदृष्टेः

ब्राह्मणादिवर्णाश्रमभेदानुपलम्भात् अभिशस्तपतितवर्जनपूर्वकं

सर्ववर्णेषु भैक्षाचरणं कुर्यात् इति च श्रुतेः। अलिङ्गस्य

ब्राह्मणत्वमाचष्टे- यमिति। कश्चिल्लोकः यं मुनिं सत्त्वेनासत्त्वेन विद्वत्त्वेनाविद्वत्त्वेन सुवृत्तत्वेन दुर्वृत्तत्वेन वा न वेद। एवं वेदनलिङ्गदर्शनात् स ब्राह्मणः। यद्वा यः कश्चित् योगी यमात्मानं देहत्रयात्मना सन्तं प्रत्यग्रूपेण न चासन्तं स्वाज्ञादिदृष्ट्या कदापि नाश्रुतं न बहु श्रुतं वृत्तप्रकटनहेत्वन्तःकरणाभावान्न सुवृत्तं न दुर्वृत्तं तत्सर्वापह्नवसिद्धनिष्प्रतियोगिकस्वमात्रधिया वेद स मुनिः वेदनसमकालं ब्राह्मणो ब्रह्मविद्वरिष्ठो ब्रह्मैव भवतीत्यर्थः। तथा च श्रुतिः - य एवं निर्बीजं वेद निर्बीज एव स भवति।

दर्शनादर्शने हित्वा स्वयं केवलरूपतः।
य आस्ते कपिशार्दूल ब्रह्म न ब्रह्मवित् स्वयम्॥

इति॥

यस्मात् अलिङ्गस्यावधूतस्वातिरिक्तप्रपञ्चदृष्टेः ब्राह्मणत्वमभिहितं तस्मात्। तं दृष्ट्वा स्वातिरिक्तकलनाशान्तमनसं तदा कदा भविष्याम इति स्पृहयन्ति दिवौकसः। स्वातिरिक्तास्तित्वलिङ्गं यदा न प्रतिभाति तदैव कैवल्यमिति ब्रह्मा नारदमनुशास्तीत्यर्थः॥ १-३६॥

क्रमसंन्यासविधिनिरूपणम्

अथ नारदः पितामहं संन्यासविधिं नो ब्रूहीति पप्रच्छ। पितामहस्तथेत्यङ्गीकृत्यातुरे वा क्रमे वापि तुरीयाश्रमस्वीकारार्थं

कृच्छ्रप्रायश्चित्तपूर्वकमष्टश्राद्धं कुर्यात्

देवर्षिदिव्यमनुष्यभूत-पीतृमात्रात्मेत्यष्ट श्राद्धानि कुर्यात्।
प्रथमं सत्यवसुसंज्ञकान् विश्वान् देवान् देवश्राद्धे
ब्रह्मविष्णुमहेश्वरान् ऋषिश्राद्धे देवर्षि-क्षत्रियर्षिमनुष्यर्षीन्
दिव्यश्राद्धे वसुरुद्रादित्यरूपान् मनुष्यश्राद्धे
सनकसनन्दनसनत्कुमारसनत्सुजातान् भूतश्राद्धे पृथिव्यादिपञ्च-
పితృపితామహప్రపితామహాన్ మాతుః శ్రాద్ధే మాతృపితామహీప్రపితామహీః
ఆత్మశ్రాద్ధే ఆత్మపితృపితామహాన్ జీవత్పితృకశ్చేత్ పితరం త్యక్త్వా
ఆత్మపితామహప్రపితామహానితి। సర్వత్ర యుగ్మక్లప్త్యా బ్రాహ్మణానర్చయేత్।
ఏకాధ్వరపక్షేఽష్టాధ్వరపక్షే వా స్వశాఖానుగతమన్త్రైరష్ట
శ్రాద్ధాన్యష్టదినేషు వా ఏకదినే వా పితృయాగోక్తవిధానేన
బ్రాహ్మణానభ్యర్చ్య భుక్త్యన్తం యథావిధి నిర్వర్త్య పిణ్డప్రదానాని నిర్వర్త్య
దక్షిణాతామ్బూలైస్తోషయిత్వా బ్రాహ్మణాన్ ప్రేషయిత్వా శేషకర్మసిద్ధ్యర్థం సప్త
కేశాన్ విసృజ్య శేషకర్మసిద్ధ్యర్థం శాన్ సప్తాష్ట వా ద్విజః సంక్షిప్య
వాపయేత్ కేశశ్మశ్రునఖాని చేతి సప్త కేశాన్ సంరక్ష్య కక్షోపస్థవర్జం
క్షౌరపూర్వకం స్నాత్వా సాయం సంధ్యావన్దనం నిర్వర్త్య సహస్రగాయత్రీం
జప్త్వా బ్రహ్మయజ్ఞం నిర్వర్త్య స్వాధీనాగ్నిముపస్థాప్య స్వశాఖోప-
आहुतिविधिं समाप्य आत्मादिभिस्त्रिवारं सक्तुप्राशनं कृत्वा
आचमनपूर्वकमग्निं संरक्ष्य स्वयमग्नेरुत्तरतः कृष्णाजिनोपरि स्थित्वा
पुराणश्रवणपूर्वकं जागरणं कृत्वा चतुर्थयामान्ते स्नात्वा तदग्नौ
चरुं श्रपयित्वा पुरुषसूक्तेनान्नं षोडशाहुतीर्हुत्वा विरजाहोमं

कृत्वा अथाचम्य सदक्षिणं वस्त्रं सुवर्णं पात्रं धेनुं दत्त्वा समाप्य
ब्रह्मोद्वासनं कृत्वा

सं मा सिञ्चन्तु मरुतः समिन्द्रः सं बृहस्पतिः ।
सं मायमग्निः सिञ्चत्वायुषा च धनेन च बलेन चायुष्मन्तं करोतु मा ॥

इति

या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मात्मानम् ।
अच्छा वसूनि कृण्वन्नस्मे नर्या पुरूणि ॥

यज्ञो भूत्वा यज्ञमासीद स्वां योनिम् ।
जातवेदो भुव आजायमानः सक्षय एहि ॥

इत्यनेनाग्निमात्मन्यारोप्य ध्यात्वाग्निं प्रदक्षिणनमस्कारपूर्वक-
కృత్వా నాభిదఘ్నోదకముపవిశ్య అష్టదిక్పాలకార్ఘ్యపూర్వకం
గాయత్ర్యుద్వాసనం కృత్వా సావిత్రీం వ్యాహృతిషు ప్రవేశయిత్వా అహం వృక్షస్య
రేరివా । కీర్తిః పృష్ఠం గిరేరివ । ఊర్ధ్వపవిత్రో వాజినీవ స్వమృతమస్మి ।
ద్రవిణం సవర్చసమ్ । సుమేధా అమృతోఽక్షితః । ఇతి త్రిశఙ్కోర్వేదానువచనమ్
యశ్ఛన్దసామృషభో విశ్వరూపః । ఛన్దోభ్యోఽధ్యమృతాత్ సంబభూవ । స
మేన్ద్రో మేధయా స్పృణోతు । అమృతస్య దేవ ధారణో భూయాసమ్ । శరీరం మే
విచర్షణమ్ । జిహ్వా మే మధుమత్తమా । కర్ణాభ్యాం భూరి విశ్రవమ్ । బ్రహ్మణః
కోశోఽసి మేధయాపిహితః । శ్రుతం మే గోపాయ ।

దారేషణాయాశ్చ ధనేషణాయాశ్చ లోకేషణాయాశ్చ వ్యుత్థితోఽహమ్ ఓం భూః
సంన్యస్తం మయా ఓం భువః సంన్యస్తం మయా ఓం సువః సంన్యస్తం మయా ఓం
భూర్భువఃసువః సంన్యస్తం మయా ఇతి మన్త్రమధ్యతారధ్వనిభిర్మనసా

వాచోచ్చార్య అభయం సర్వబూతేభ్యో మత్తః సర్వం ప్రవర్తతే స్వాహా ఇత్యనేన జలం ప్రాశ్య ప్రాచ్యాం దిశి పూర్ణాఞ్జలిం ప్రక్షిప్య ఓం స్వాహా ఇతి శిఖాముత్పాట్య

యజ్ఞోపవీతం పరమం పవిత్రం ప్రజాపతేర్యత్ సహజం పురస్తాత్ ।
ఆయుష్యమగ్ర్యం ప్రతిముఞ్చ శుభ్రం యజ్ఞోపవీతం బలమస్తు తేజః ॥

యజ్ఞోపవీతం బహిర్న నివసేత్ త్వమన్తః ప్రవిశ్య మధ్యే హ్యజస్రమ్ ।
పరమం పవిత్రం యశో బలం జ్ఞానవైరాగ్యం మేధాం ప్రయచ్ఛ ॥

ఇతి యజ్ఞోపఈతం ఛిత్వా ఉదకాఞ్జలినా సహ ఓం భూః సముద్రం గచ్ఛ స్వాహా ఇత్యప్సు జుహుయాత్ । ఓం భూః సంన్యస్తం మయా ఓం భువః సంన్యస్తం మయా ఓం సువః సంన్యస్తం మయా ఇతి త్రిరుక్త్వా త్రివారమభిమన్త్ర్య తజ్జలం ప్రాశ్యాచమ్య ఓం భూః స్వాహా ఇత్యప్సు వస్త్రం కటిసూత్రమపి విసృజ్య సర్వకర్మనివర్తకోఽహమితి స్మృత్వా జాతరూపధరో భూత్వా స్వరూపానుసంధానపూర్వకమూర్ధ్వబాహురుదీచీం గచ్చేత్ ॥ ३२ ॥

పూర్వవద్విద్వత్సంన్యాసీ చేత్ గురోః ప్రణవమహావాక్యోపదేశం ప్రాప్య యథాసుఖం విహరన్ మత్తః కశ్చిన్నాన్యో వ్యతిరిక్త ఇతి ఫలపత్రోదకాహారః పర్వతవనదేవతాలయేషు సంచరేత్ । సంన్యస్యాథ దిగమ్బరః సకలసంచారకం సర్వదానన్దస్వానుభవైకపూర్ణహృదయః కర్మాతిదూరలాభః ప్రాణధారణ-
स्मरंस्तारकम् ॥ ३८ ॥

विविदिषासंन्यासी चेच्छतपथं गत्वाचार्यादिभिर्विप्रैः तिष्ठ तिष्ठ महाभाग दण्डं वस्त्रं कमण्डलुं गृहाण प्रणवमहावाक्य-
శాటీమేకాం కమణ్డలుం పాదాదిమస్తకప్రమాణమవ్రణం సమం

సౌమ్యమకాకపృష్ఠం సలక్షణం వైణవదణ్డమేకమాచనపూర్వకమ్ సఖా
మా గోపాయౌజః సఖా యోఽసీన్ద్రస్య వజ్రోఽసి వార్త్రఘ్నః శర్మ మే భవ యత్ పాపం
తన్నివారయ ఇతి దణ్డం పరిగ్రహేత్ । జగజ్జీవనం జీవనాధారభూతం మాతే మా
మన్త్రయస్వ సర్వదా సర్వసౌమ్య ఇతి ప్రణవపూర్వకం కమణ్డలుం పరిగృహ్య
కౌపీనాధారం కటిసూత్రమోమ్ ఇతి గుహ్యాచ్ఛాదకం కౌపీనమోమ్ ఇతి
శీతవాతోష్ణత్రాణకరం దేహైకరక్షణం వస్త్రమోమ్ ఇతి కటిసూత్రకౌపీన-
स्वाश्रमाचारपरो भवेत् । इत्युपनिषत् ॥ ३९ ॥

ब्रह्मणैवमनुशासितो नारदः क्रमसंन्यासविधिबुभुत्सया पितामहं
पृच्छतीत्याह- अथेति । पितामहस्तु नारदप्रश्नमङ्गीकृत्य
प्रतिवचनमाह- तथेति ।
प्राजापत्यादिकृच्छ्रप्रायश्चित्तपूर्वकमष्टश्राद्धं कुर्यात् । अष्ट
श्राद्धानि कानि? इत्यत्र- देवर्षीति । देवादिश्राद्धे
विश्वेदेवादिवरणक्रम-माह- प्रथममिति ।
सायंसन्ध्यादिशेषकर्मसिद्ध्यर्थम् । वक्ष्यमाण-मन्त्रद्वयेन
प्रकृताग्न्यात्मसमारोपणं कुर्यादित्याह- सं मा सिञ्चन्त्वित्यादिना ।
अहं वृक्षस्येत्यादिमन्त्रद्वयं

पठित्वा प्रेषोच्चारणं कुर्यादित्याह- अहमिति । अहं वृक्षस्येति
मन्द्रद्वयं पठित्वा अथ दारेषणायाश्चेति । यदि पूर्ववत् विद्वत्संन्यासी चेत्
तदा गुरोरिति । अहमेव परमात्मा । मत्तः कश्चिन्नान्यो व्यतिरिक्तः । ततः किम्-
దిగమ్బరః సకలలోకసంచారకం తద్భ్రమముత్సృజ్య సర్వదానన్దస్వాను-
सर्वकर्मत्यागलब्धहर्षः केवलप्राणधारणपरायणः । ततो विमुक्तो
भवतीत्यत्र-

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्।
यः प्रयाति त्यजन् देहं स याति परमां गतिम्॥

इति स्मृतेः। यद्ययं विविदिषासंन्यासीति। सखा मा गोपाय- इति मन्त्रेण दण्डं परिग्रहेत्। कटिसूत्रकौपीनवस्त्रमाचमनपूर्वकं स्वीकृत्य गुरुनिकटं अत्वा तन्मुखात् प्रणवमहावाक्योपदेशं प्राप्य स्वाश्रमोचिताचारं कुर्वन् संशयादिपञ्चदोषनिवृत्त्यन्तं सर्ववेदान्त-
చతుర్థోపదేశసమాప్త్యర్థోఽయమిత్యుపనిషచ్ఛబ్దః॥ ३८-३९॥

ఇతి చతుర్థోపదేశః

పఞ్చమోపదేశః

కర్మసంన్యాసస్వాశ్రమాచరణయోరవిరోధః

అథ హైనం పితామహం నారదః పప్రచ్ఛ। భగవన్ సర్వకర్మనివర్తకః సంన్యాస ఇతి త్వయైవోక్తః। పునః స్వాశ్రమాచారపరో భవేదిత్యుచ్యతే। తతః పితామహ ఉవాచ। సశరీరస్య దేహినో జాగ్రత్స్వప్నసుషుప్తితుర్యావస్థాః సన్తి। తదధీనాః కర్మజ్ఞానవైరాగ్యప్రవర్తకాః పురుషా జన్తవస్తదనుకూలా-

तदनुष्ठानभेदाः कीदृशास्तत्त्वतोऽस्माकं वक्तुमर्हसीति।
तथेत्यङ्गीकृत्य तं पितामहेन॥ १॥

कर्मत्यागकर्माचरणयोः विरोधं मन्यामानो नारदः पृच्छतीत्याह-

अथेति। पितामहं नारदः पप्रच्छ। किमिति- भगवन्निति। नारदेनैवं पृष्ठः सन् प्रश्नोत्तरं भगवानाह- तत इति। ततः पितामह उवाच। किमित्यत्र- सशरीरस्येति। देहत्रयावच्छिन्नजीवस्य जाग्रदाद्यवस्थाचतुष्टयवत्त्वेन कर्मभक्तिवैराग्यज्ञानसंभवात्। एवमवस्थाचतुष्टयावच्छिन्नप्राणिनः तदनुकूलाचारा भवन्तीति स्वाश्रमाचारपरोभवेदित्युक्तम्। स्वाश्रमाचारसंपत्तिस्तु व्रतिगृहिवनिसेव्यश्रौतस्मार्तकर्मसामान्यसंन्यासपूर्वकं प्राणधारणोपयोगिपरिग्रहश्रवणादिसाधनसंपत्तिरित्यर्थः। एकस्यैव सर्वकर्मसंन्यासपूर्वकं स्वाश्रमाचारपरत्वमुपपद्यते। नारदेन यत् पृष्टं तत् तथेत्यङ्गीकृत्य तं प्रति पितामहेनैवमुक्तम्॥ १॥

संन्यासचातुर्विध्यम्

संन्यासभेदैराचारभेदः कथमिति चेत् तत्त्वतस्त्वेक एव संन्यासः अज्ञानेनाशक्तिवशात् कर्मलोपतश्च त्रैविध्यमेत्य वैराग्यसंन्यासो ज्ञानसंन्यासो ज्ञानवैराग्यसंन्यासः कर्मसंन्यासश्चेति चातुर्विध्यमुपागतः॥ २॥

किमिति- संन्यासभेदैः आचारभेदः कथमिति चेत् इत्येवं मन्यसे यदि तदा शृण्वेतत्। स केन भिद्यत इत्यत्र- अज्ञानेनेति। त्रैविध्यमेत्य वर्तते विद्वद्वि-विदिषातुरभेदात्। स पुनश्चातुर्विध्यमुपगत इत्याह- वैराग्येति॥ २॥

वैराग्यसंन्यासः

तद्यथेति। दुष्टमदनाभावाच्चेति विषयवैतृष्ण्यमेत्य
प्राक्पुण्यकर्मवशात् संन्यस्तः स वैराग्यसंन्यासी॥ ३॥

तथैव प्रतिपाद्यते। सर्वानर्थहेतुदुष्टमदनाभावाच्चेति। चशब्दतस्तत्-
సంన్యస్తః స వైరాగ్యసంన్యాసీ। స్వాతిరిక్తనశ్వరహేయబుద్ధ్యా యః సర్వత్యాగః
స వైరాగ్యసంన్యాస ఇత్యర్థః॥ ౩॥

జ్ఞానసంన్యాసః

శాస్త్రజ్ఞానాత్ పాపపుణ్యలోకానుభవశ్రవణాత్ ప్రపఞ్చోపరతః
క్రోధేర్ష్యాసూయాహంకారాభిమానాత్మకసర్వసంసారం నిర్వర్త్య
దారైషణాధనైషణాలోకైషణాత్మకదేహవాసనాం శాస్త్రవాసనాం
లోకవాసనాం చ త్యక్త్వా వమనాన్నమివ ప్రాకృతికం సర్వమిదం హేయం మత్వా
సాధనచతుష్టయసంపన్నో యః సంన్యస్యతి స ఏవ జ్ఞానసంన్యాసీ॥ ౪॥

జ్ఞాన సంన్యాసస్వరూపమాహ - శాస్త్రేతి॥ ౪॥

జ్ఞానవైరాగ్యసంన్యాసః

క్రమేణ సర్వమభ్యస్య సర్వమనుభూయ జ్ఞానవైరాగ్యాభ్యాం
స్వరూపానుసంధానేన జాతరూపధరో భవతి సోఽయం జ్ఞానవైరాగ్యసంన్యాసీ॥ ౫॥

విశిష్టజ్ఞానవైరాగ్యసంన్యాసమాహ- క్రమేణేతి। క్రమేణ వేదాన్తజాతం
సర్వమభ్యస్య సర్వమనుభూయ సర్వాపహ్నవసిద్ధం బ్రహ్మ నిష్ప్రతియోగిక-

ताभ्यां ज्ञानवैराग्याभ्यां स्वरूपानुसंधानेन सर्वं विस्मृत्य यो जातरूपधरो भवति सोऽयं ज्ञानवैराग्यसंन्यासी इत्यर्थः ॥ ५॥

कर्मसंन्यासः

ब्रह्मचर्यं समाप्य गृही भूत्वा वानप्रस्थाश्रममेत्य वैराग्याभावे-

బ్రహ్మచర్యేణ సంన్యస్య సంన్యాసాజ్జాతరూపధరో వైరాగ్యసంన్యాసీ। విద్వత్సంన్యాసీ జ్ఞానసంన్యాసీ। వివిదిషాసంన్యాసీ కర్మన్యాసీ॥ ౭॥

కర్మసంన్యాసస్వరూపం విశదయతి- బ్రహ్మచర్యమితి। విధివత్ బ్రహ్మచర్యం సమాప్యేతి। విషయానభిజ్ఞతయా బ్రహ్మచర్యసంన్యస్తం స్తౌతి- బ్రహ్మచర్యేణేతి। తస్య సర్వాత్మభావారూఢతయా పశ్యద్దృష్టివైచిత్ర్యాత్ సర్వరూపత్వముప-పద్యత ఇత్యర్థః॥ ౬-౭॥

నిమిత్తానిమిత్తభేదేన కర్మసంన్యాసస్య ద్వైవిధ్యమ్

కర్మసంన్యాసోఽపి ద్వివిధః- నిమిత్తసంన్యాసోఽనిమిత్తసంన్యాసశ్చేతి। నిమిత్తస్త్వాతురః అనిమిత్తః క్రమసంన్యాసః। ఆతురః సర్వకర్మలోపః ప్రాణస్యోత్క్రమణకాలసంన్యాసః స నిమిత్తసంన్యాసః। దృఢాఙ్గో భూత్వా సర్వం కృతకం నశ్వరమితి దేహాదికం సర్వం హేయం ప్రాప్య॥ ౮॥

హంసః శుచిషద్వసురన్తరిక్షసద్ధోతా వేదిషదతిథిర్దురోణసత్। నృషద్వరసదృతసద్వ్యోమసదబ్జా గోజా ఋతజా అద్రిజా ఋతం బృహత్॥ ౯॥

బ్రహ్మవ్యతిరిక్తం సర్వం నశ్వరమితి నిశ్చిత్య క్రమేణ యః సంన్యస్యతి స సంన్యాసోఽనిమిత్తసంన్యాసః ॥ ౧౦ ॥

నిమితానిమిత్తభేదేన కర్మసంన్యాసస్య ద్వైవిధ్యమాహ- కర్మేతి ।
నిమిత్తానిమిత్త-శబ్దార్థమాహ- నిమిత్తస్త్వాతురః అనిమిత్తః
క్రమసంన్యాస ఇతి । నిమిత్తసంన్యాసార్థం విశదయతి- ఆతుర ఇతి ।
అనిమిత్తస్వరూపమాహ- దృఢాఙ్గ ఇతి । ఋతం బృహత్ ఇతి మన్త్రానురోధేన
బ్రహ్మైవర్తం బ్రహ్మవ్యతిరిక్తం సర్వం నశ్వరమ్ ॥ ౮-౧౦ ॥

కుటీచకాదిభేదేన సంన్యాసః షడ్విధః

సంన్యాసః షడ్విధో భవతి- కుటీచకో బహూదకో హంసః
పరమహంసస్తుఈయా-తీతోఽవధూతశ్చేతి ॥ ౧౧ ॥

కతివిధః సంన్యాస ఇత్యత్ర కుటీచకాదిభేదేన షడ్విధ ఇత్యాహ- సంన్యాస ఇతి ।
తత్ కథమిత్యత్రాహ- కుటీచక ఇతి ॥ ౧౧ ॥

కుటీచకలక్షణమ్

కుటీచకః శిఖాయజ్ఞోపవీతీ దణ్డకమణ్డలుధరః కౌపీనకన్థాధరః
పితృమాతృగుర్వారాధనపరః పిఠరఖనిత్రశిక్యాదిమన్త్రసాధనపర
ఏకత్రాన్నాదనపరః శ్వేతోర్ధ్వపుణ్డ్రధారీ త్రిదణ్డః ॥ ౧౨ ॥

బహూదకలక్షణమ్

బహూదకః శిఖాదికన్థాధరస్త్రిపుణ్డ్రధారీ కుటీచకవత్ సర్వసమో మధుకరవృత్త్యాష్టాకబలాశీ || ౧౩ ||

హంసలక్షణమ్

హంసో జటాధారీ త్రిపుణ్డ్రోర్ధ్వపుణ్డ్రధారీ అసంక్లృప్తమాధూకరాన్నాశీ కౌపీనఖణ్డతుణ్డధారీ || ౧౪ ||

పరమహంసలక్షణం

పరమహంసః శిఖాయజ్ఞోపవీతరహితః పఞ్చగృహేష్వేకరాత్రాన్నాదనపరః కరపాత్రీ ఏకకౌపీనధారీ శాటీమేకామేకం వైణవం దణ్డమేకశాటీధరో వా భస్మోద్ధూలనపరః సర్వత్యాగీ || ౧౫ ||

తేషాం లక్షణం క్రమేణ స్పష్టయతి- కుటీచక ఇతి |
త్రిపుణ్డ్రోర్ధ్వపుణ్డ్రధారీ త్రిపుణ్డ్రం ఊర్ధ్వపుణ్డ్రం వా యథా సంభవం ధరతి నోభయమిత్యర్థః | అసంక్లృప్తమాధూకరాన్నాశీ అస్య గృహేఽద్య మాధూకరం మే స్యాదితి సంకల్పరహితః || ౧౨-౧౫ ||

తురీయాతీతలక్షణమ్

తురీయాతీతో గోముఖః ఫలాహారీ అన్నాహారీ చేద్ గృహత్రయే దేహమాత్రావశిష్టః దిగమ్బరః కుణపవచ్ఛరీరవృత్తికః || ౧౬ ||

అవధూతలక్షణమ్

అవధూతస్త్వనియమోఽభిశస్తపతితవర్జనపూర్వకం సర్వవర్ణేష్వజగరవృత్త్యా-

गोमुखः गोवत् यदृच्छालब्धान्नमुखग्रसनात्। तथाच वक्ष्यति-
आस्येन तु यदाहारं गोवन्मृगयते मुनिः इति। कुणपवच्छरीरवृत्तिकः
यथा कुणपो निश्चेष्टः तथा निर्विकल्पकसमाधिकबलितव्यापृतित्वात्॥ १६-

జీవతః ఆతురస్య క్రమసంన్యాసః

ఆతురో జీవతి చేత్ క్రమసంన్యాసః కర్తవ్యః॥ ౧౮॥

యద్యాతురో జీవతి తేన కిం కర్తవ్యమిత్యత ఆహ- ఆతుర ఇతి। గురుముఖతః
ప్రణవమహావాక్యాదిస్వీకార ఏవ క్రమసంన్యాసః। న త్వష్టశ్రాద్ధాదిః తస్య
ప్రేషోచ్చారణసమకాలక్రియత్వాత్॥ ౧౮॥

కుటీచకాదీనాం సంన్యాసవిధిః

కుటీచకబహూదకహంసానాం బ్రహ్మచర్యాశ్రమాదితురీయాశ్రమవత్ కుటీచకానాం
సంన్యాసవిధిః॥ ౧౯॥

కుటీచకాదీనాం సంన్యాసవిధిః కథమిత్యత ఆహ- కుటీచకేతి। కుటీచకానాం
సంన్యాసవిధిః సమానః॥ ౧౯॥

పరమహంసాదిత్రయాణాం సంన్యాసవిధిః

పరమహంసాదిత్రయాణాం న కటిసూత్రం న కౌపీనం న వస్త్రం న కమణ్డలుర్న
దణ్డః సర్వవర్ణైకభైక్షాటనపరత్వం జాతరూపధరత్వం విధిః।
సంన్యాసకాలేఽప్యలంబుద్ధిపర్యన్తమధీత్య తదనన్తరం కటిసూత్రం కౌపీనం
దణ్డం వస్త్రం కమణ్డలుం సర్వమప్సు విసృజ్యాథ జాతరూపధరశ్చరేన్న
కన్థాలేశః నాధ్యేతవ్యో న వక్తవ్యో న శ్రోతవ్యమన్యత్ కించిత్। ప్రణవాదన్యం
న తర్కం పఠేన్న శబ్దమపి। బహూఞ్ఛబ్దాన్నాధ్యాపయేన్న మహద్వాచో
విగ్లాపనం గిరా పాణ్యాదినా సంభాషణం నాన్యభాషావిశేషేణ న
శూద్రస్త్రీపతితోదక్యాసంభాషణమ్ న యతేర్దేవపూజానుత్సవదర్శనం
తీర్థయాత్రావృత్తిః॥ ౨౦॥

పరమహంసాదిత్రయాణాం పరమహంసతుర్యాతీతావధూతానామ్। యది పరమహంసః
శ్రవణార్థీ తదా దణ్డాదికం స్వీకృత్య సంశయాదిపఞ్చదోషశాన్తిపూర్వకం
యావద్బ్రహ్మాపరోక్షో జాయతే తావత్ సర్వకర్మసంన్యాసకాలేఽపి
సంన్యాసదశాయామపి। శృణ్వన్త్వజ్ఞాతతత్త్వాస్తే జానన్
కస్మాచ్ఛృణోమ్యహమ్ ఇతి శ్రుత్యనురోధేన అలంబుద్ధిపర్యన్తమధీత్య
శ్రవణాదిజన్యజ్ఞానే సిద్ధే। తదనన్తరమితి। అవధూతాశ్రమేఽపి కన్థాదికం
గ్రాహ్యమేవేత్యత ఆహ- నేతి। యత్కించిదపి నాధ్యేతవ్యః। గిరా వృథా
కత్థనమ్। పాణ్యాదినా సంభాషణం హస్తాదిసంజ్ఞయా వ్యాపృతిపరో న
భవేదిత్యర్థః। స్వభిన్నధియా న యతేర్దేవపూజానుత్సవదర్శనమ్। యతినా తత్రాపి
స్వాత్మదర్శనమేవ కార్యమిత్యర్థః। తథా తీర్థయాత్రావృత్తిః॥ ౨౦॥

కుటీచకాదీనాం భిక్షావిశేషః

పునర్యతివిశేషః। కుటీచకస్యైకత్ర భిక్షా బహూదకస్యాసంక్లప్త-

पञ्चगृहेषु करपात्रम् फलाहारो गोमुखं तुरीयातीतस्य अवधूतस्याजगरवृत्तिः सर्ववर्णिकेषु। यतिर्नैकरात्रं वसेत्। नैकस्यापि नमेत्। तुरीयातीतावधूतयोर्न ज्येष्ठः। यो न स्वरूपज्ञः स ज्येष्ठोऽपि कनिष्ठः। हस्ताभ्यां नद्युत्तरणं न कुर्यान्न वृक्षमारोहेन्न यानाधिरूढो न क्रयविक्रयपरो न किंचिद्विनिमयपरो न दाम्भिको नानृतवादी। न यतेः किंचित् कर्तव्यमस्ति। अस्ति चेत् सांकर्यम्। तस्मान्मननादौ संन्यासिनामधिकारः॥ २१॥

पुनर्यतिविशेषः। कुटीचकादीनां भिक्षाविशेष उच्यते - कुटीचकस्येति। यत्र कुत्रापि यतिः नैकरात्रं वसेन्न कस्यापि नमेत्। गुरुज्येष्ठादिवन्दनं कार्यमिति चेत् तत्र - तुरीयातीतेति। तुरीयातीतादेः ज्ञानज्येष्ठत्वात्। तस्य प्रवृत्तिनिवृत्तपराङ्मुखत्वेन किंचिदपि कर्तव्याभावमाह- हस्ताभ्यामिति। कदापि न यतेः किंचित् कर्तव्यमस्ति। अस्ति चेत् तदा भवति सांकर्यम्। यस्मात् एवमुक्ताचरणतो व्रत्यादिसांकर्यं भवति तस्मात्। आदिशब्देन ब्रह्मभावापत्त्या प्रवृत्तिनिवृत्तिग्रासतूष्णीमवस्थानं द्योत्यते॥ २१॥

तेषां प्राप्यस्थानानि

आतुरकुटीचकयोर्भूर्लोकभुवर्लोकौ बहूदकस्य स्वर्गलोकः हंसस्य तपोलोकः परमहंसस्य सत्यलोकः तुरीयातीतावधूतयोः स्वात्मन्येव कैवल्यं स्वरूपानुसन्धानेन भ्रमरकीटन्यायवत्॥ २२॥

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम्।
तं तमेव समाप्नोति नान्यथा श्रुतिशासनम्॥ २३॥

ज्ञानाविकलकुटीचकादीनां प्राप्यमुच्यते- आतुरेति। यदि सविशेषज्ञानी तदा तस्य परमहंसस्य सत्यलोकः। यदि निर्विशेषब्रह्मज्ञानिनौ तुर्यातीतावधूतौ भवतः तदा तयोः तुर्यातीतावधूतयोः स्वात्मन्येव कैवल्यम्। यत एवं स्वरूपानुसंधानेन भ्रमरकीटन्यायात् ब्रह्मभावापत्तिर्भवति अत एव स्वस्वरूपानुसंधानं सदा कार्यमित्यर्थः। किमर्थं सदा स्वरूपानुसंधानं कर्तव्यमित्याकाङ्क्षायां निर्विशेषज्ञानिनो ज्ञानसमकालमेव मुक्तत्वेऽपि सविशेषज्ञानिनस्तदभावात् सदा स्वरूपानुसंधानं कर्तव्यमित्याह- यमिति। चरमदशायां यं यं वापीति। तथा च स्मृतिरपि-

अन्तकाले च मामेव स्मरन् मुक्त्वा कलेबरम्।
यः प्रयाति त्यजन् देहं स याति परमां गतिम्॥

इति॥ २२-२३॥

ब्रह्मानुसंधानमेव कर्तव्यम् नान्यत्

तदेवं ज्ञात्वा स्वरूपानुसंधानं विनान्यथाचारपरो न भवेत्। तदाचारवशात् तत्तल्लोकप्राप्तिः। ज्ञानवैराग्यसंपन्नस्य स्वस्मिन्नेव मुक्तिरिति न सर्वत्राचारप्रसक्तिस्तदाचारः। जाग्रत्स्वप्नसुषुप्तिष्वेकशरीरस्य जाग्रत्काले विश्वः स्वप्नकाले तैजसः सुषुप्तिकाले प्राज्ञः। अवस्थाभेदादवस्थेश्वरभेदः। कार्यभेदात् कारणभेदः। तासु चतुर्दशकरणानां बाह्यवृत्तयोऽन्तर्वृत्तयस्तेषामुपादानकारणम्।

वृत्तयश्चत्वारः मनो बुद्धिरहंकारश्चित्तं चेति।
तत्तद्वृत्तिव्यापारभेदेन पृथगाचारभेदः॥ २४॥

नेत्रस्थं जागरितं विद्यात् कण्ठे स्वप्नं समाविशेत्।
सुषुप्तं हृदयस्थं तु तुरीयं मूर्ध्नि संस्थितम्॥ २५॥

तुरीयमक्षरमिति ज्ञात्वा जागरिते सुषुप्त्यवस्थापन्न एव यद्यच्छ्रुतं यद्यद् दृष्टं तत्तत् सर्वमविज्ञातमिव यो वसेत् तस्य स्वप्नावस्थायामपि

तादृगवस्था भवति। स जीवन्मुक्त इति वदन्ति। सर्वश्रुत्यर्थप्रतिपादनमपि तस्यैव मुक्तिरिति। भिक्षुर्नैहिकामुष्मिकापेक्षः। यद्यपेक्षास्ति चेत् तदनुरूपो भवति। स्वरूपानुसंधानव्यतिरिक्तान्यशास्त्राभ्यासैः उष्ट्रकुङ्कुमभारवद्व्यर्थः। न योगशास्त्रप्रवृत्तिर्न सांख्यशास्त्राभ्यासो न मन्त्रतन्त्रव्यापारः। इतरशास्त्रप्रवृत्तिर्यतेरस्ति चेच्छवालंकारवत्। चर्मकारवदतिविदूरकर्माचारविद्यादूरः। प्रणवकीर्तनपरः। यद्यत् कर्म करोति तत्तत्फलमनुभवति। एरण्डतैलफेनवदतः सर्वं परित्यज्य तत्प्रसक्तं मनोदण्डं करपात्रं दिगम्बरं दृष्ट्वा परिव्रजेद् भिक्षुः। बालोन्मत्तपिशाचवन्मरणं जीवितं वा न काङ्क्षेत कालमेव प्रतीक्षेत निर्देशभृतकन्यायेन परिव्राडिति॥ २६॥

यदेवं श्रुतिस्मृतिष्वाम्नातं तदेवं ज्ञात्वा सविशेषज्ञानी स्वरूपानुसंधानं विनान्यथाचारपरो न भवेत् ब्रह्माहमस्मीति सदानुसंधानं कुर्यादित्यर्थः। अन्यथाचारपरत्वे बाधकमाह- तदाचारवशात् तत्तल्लोकप्राप्तिरिति। निर्विशेषज्ञानिनोऽपि तथा स्यादिति चेन्न तस्य

निष्प्रतियोगिकब्रह्ममात्रभावापन्नत्वेन स्वातिरिक्तप्रवृत्तिनिवृत्ति-
స్వాతిరిక్తజాగ్రదాదిప్రపఞ్చప్రతీతిసంభవాత్ | బ్రహ్మానుసంధానం
వినాన్యథాచారపరో న భవేదిత్యాహ- జ్ఞానేతి |
అపరబ్రహ్మగోచరజ్ఞానవైరాగ్యసంపన్నస్య స్వస్మిన్నేవ ముక్తిరితి న
సర్వత్రాచారప్రసక్తిః | యది సర్వత్రాచారప్రసక్తిః తదాచారోఽనర్థాయ
భవేదిత్యర్థః | తత్ కథమిత్యత్ర స్వాతిరిక్తజాగ్రదాదివిభ్రమావృతదృష్ట్యా
జాగ్రత్స్వప్నసుషుప్తిష్వేకశరీరస్య తదవచ్ఛిన్నజీవస్యావస్థాభేదేన
నామవ్యాపారాదికం భిద్యతే తద్యథా జాగ్రత్కాల ఇతి | తాసు జాగ్రదాద్యవస్థాసు
వాగాదిచతుర్దశకరణానాం బాహ్యవృత్తయోఽన్తర్వృత్తయః సన్తి | చత్వారః
చతస్రః | కాస్తా ఇత్యత్ర మన ఇతి | తాసాం పృథగాచారభేదః | తత్ కథం
నేత్రస్థమితి |

విశ్వాదిరూపేణ నేత్రాదిప్రవిభక్తజాగ్రదాద్యవస్థాత్రయం భాసయన్ యోఽహం
మూర్ధ్ని తుర్యరూపేణావస్థితోఽస్మి సోఽహమాత్మానం తురీయమక్షరమితి జ్ఞాత్వా
తజ్జ్ఞానమహిమ్నా కృతకృత్యో భవామి | కించ జాగరిత ఇతి | యథా
సుషుప్త్యవస్థాపన్నో విషయజాతం న విజానాతి తథా జాగరితేఽపి శ్రోత్రాదికరణేన
యద్యత్ శ్రుతం యద్యత్ దృష్టం తత్ సర్వమవిజ్ఞాతమివ యో వర్తతే తస్య
స్వప్నావస్థాయామపి సుషుప్తవద్విషయభేదం న గృహ్ణాతి స జీవన్ముక్త ఇతి వదన్తి
| తథా చ వక్ష్యతి-

స్వప్నేఽపి యో హి యుక్తస్య జాగ్రతీవ విశేషతః |
ఈదృక్చేష్టః స్మృతః శ్రేష్ఠో వరిష్ఠో బ్రహ్మవాదినామ్ ||

ఇతి | తథావిధస్యాపి యది స్వాతిరిక్తవిషయాకాఙ్క్షా స్యాత్ తదా తస్మిన్ కాలే విదేహో

దేహస్మరణవర్జితః ఈషన్మాత్రం స్మృతం చేద్యస్తదా సర్వసమన్వితః ఇతి శ్రుత్యనురోధేన స్వరూపతః చ్యుతిః స్యాదిత్యాహ- భిక్షురితి । యద్యపేక్షాస్తి చేత్ తదనురూపో భవతి । అన్యశాస్త్రాభ్యాసైః అన్యశాస్త్రాభ్యాసః । యత ఏవం స్వాతిరిక్తాస్తిత్వప్రవృత్తితో మహాననర్థో జాయతే । నిర్వికల్పకబ్రహ్మాను- दृष्ट्वा परिव्रजेत् भिक्षुः कदापि । बालोन्मत्तेति निर्देशभृतकन्यायेन परिव्राडिति ॥ २४-२६ ॥

अननुसंधाने पातित्यम्

तितिक्षाज्ञानवैराग्यशमादिगुणवर्जितः ।
भिक्षामात्रेण जीवी स्यात् स यतिर्यतिवृत्तिहा ॥ २७ ॥

न दण्डधारणेन न मुण्डनेन
न वेषेण न दम्भाचारेण मुक्तिः ॥ २८ ॥

ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते ।
काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः ॥
स याति नरकान् घोरान् महारौरवसंज्ञकान् ॥ २९ ॥

प्रथिष्ठा सूकरीविष्ठासमा गीता महर्षिभिः ।
तस्मादेनां परित्यज्य कीटवत् पर्यटेद्यतिः ॥ ३० ॥

सविशेषज्ञानी निर्विशेषज्ञानसाधनमननुष्ठाय केवलवेषमात्रतः साधुवृत्तिकर्शको भूत्वा स्वयमपि नश्यतीत्याह- तितिक्षेति

निर्विशेषज्ञान-मुख्यसाधनतितिक्षाज्ञानवैराग्यशमादिगुणवर्जितः न च संन्यसंन्यसनादेव सिद्धिं समधिगच्छति इति स्मृतेः। परमदयावती श्रुतिरियं परिव्राजकधर्मपूगं बहुप्रकारेण प्रतिपाद्यापि पुनः पुनः जामितां त्यक्त्वा प्रकटयतीत्याह- ज्ञानेत्यादिना। तद्विपर्यये काष्ठदण्ड इति। अयं सर्वोत्तम इति॥ २७-३०॥

तुर्यातीतानां भोजनादिकमन्यदीयेच्छयैव

अयाचितं यथालाभं भोजनाच्छादनं भवेत्।
परेच्छया च दिग्वासाः स्नानं कुर्यात् परेच्छया॥ ३१॥

तुर्यातीतादेः स्नानादिकं परेच्छया स्यादित्याह- अयाचितमिति॥ ३१॥

ब्रह्मविद्वरिष्ठः

स्वप्नेऽपि यो हि युक्तः स्याज्जाग्रतीव विशेषतः।
ईदृक्चेष्टः स्मृतः श्रेष्ठो वरिष्ठो ब्रह्मवादिनाम्॥ ३२॥

अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत्।
प्राणयात्रिकमात्रः स्यान्मात्रासङ्गविवर्जितः॥ ३३॥

अभिपूजितलाभांश्च जुगुप्सेतैव सर्वशः।
अभिपूजितलाभैस्को यतिर्मुक्तोऽपि बध्यते॥ ३४॥

कोऽयं ब्रह्मनिष्ठ इत्यत्र- स्वप्नेऽपीति। लाभादौ हर्षादिदृष्टेः

**ब्रह्मनिष्ठता कुत इत्यत्र अलाभे इति। मात्रासङ्गविवर्जितः शब्दादि-**
భక్తజనప్రేమవిషయాణామసఙ్గతా కుత ఇత్యత్ర- అభిపూజితేతి। లాభైస్కో
లాభస్కః లాభవానిత్యర్థః॥ ౩౨-౩౪॥

యతీనాం భోజనాదినియమాః

ప్రాణయాత్రానిమిత్తం చ వ్యఙ్గారే భుక్తవజ్జనే।
కాలే ప్రశస్తవర్ణానాం భిక్షార్థం పర్యటేద్ గృహాన్॥ ౩౫॥

పాణిపాత్రం చరన్ యోగీ నాసకృద్భైక్షమాచరేత్।
తిష్ఠన్ భుఞ్జ్యాచ్చరన్ భుఞ్జ్యాన్మధ్యే నాచమనం తథా॥ ౩౬॥

అబ్ధీవ ధృతమర్యాదా భవన్తి విశదాశయాః।
నియతిం న విముఞ్చన్తి మహాన్తో భాస్కరా ఇవ॥ ౩౭॥

ఆస్యేన తు యదాహారం గోవన్మృగయతే మునిః।
తదా సమః స్యాత్ సర్వేషు సోఽమృతత్వాయ కల్పతే॥ ౩౮॥

అనిన్ద్యం వై వ్రజన్ గేహం నిన్ద్యం గేహం తు వర్జయేత్।
అనావృతే విశేద్ ద్వారి గేహే నైవావృతే వ్రజేత్॥ ౩౯॥

పాంసునా చ ప్రతిచ్ఛన్నశూన్యాగారప్రతిశ్రయః।
వృక్షమూలనికేతో వా త్యక్తసర్వప్రియాప్రియః॥ ౪౦॥

పరమహంసాదీనాం మాధూకరకరపాత్రాస్యాహారప్రకారమాహ- ప్రాణేతి।

గ్రామాద్బహిర్వృక్షమూలే స్థిత్వా యథోక్తకాలే ప్రాణయాత్రానిమిత్తభిక్షార్థం గ్రామం ప్రవిశ్య యథావిధి భిక్షామటేదిత్యర్థః ॥ తతః కరపాత్రనియమమాహ- పాణిపాత్రమితి । కృతార్థానామేవం నియతిః కేత్యత్ర అబ్ధీవేతి । మాధూకరాదివృత్తిత్రయేఽపి అనిన్ద్యమితి । తద్వసతిమాహ- పాంసునేతి ॥ ౩౫ -౪౦ ॥

యతేః జితేన్ద్రియత్వమ్

యత్రాస్తమితశాయీ  స్యాన్నిరగ్నిరనికేతనః ।
యథాలబ్ధోపజీవీ స్యాన్మునిర్దాన్తో జితేన్ద్రియః ॥ ౪౧ ॥

నిష్క్రమ్య వనమాస్థాయ జ్ఞానయజ్ఞో జితేన్ద్రియః ।
కాలకాఙ్క్షీ చరన్నేవ బ్రహ్మభూయాయ కల్పతే ॥ ౪౨ ॥

అభయం సర్వభూతేభ్యో దత్త్వా చరతి యో మునిః ।
న తస్య సర్వభూతేభ్యో భయముత్పద్యతే క్వచిత్ ॥ ౪౩ ॥

నిర్మానశ్చానహంకారో నిర్ద్వన్ద్వశ్ఛిన్నసంశయః ।
నైవ క్రుధ్యతి న ద్వేష్టి నానృతం భాషతే గిరా ॥ ౪౪ ॥

పుణ్యాయతనచారీ చ భూతానామవిహింసకః ।
కాలే ప్రాప్తే భవేద్ భైక్షం కల్పతే బ్రహ్మభూయసే ॥ ౪౫ ॥

వానప్రస్థగృహస్థాభ్యాం న సంసృజ్యేత కర్హిచిత్ ।
అజ్ఞాతచర్యాం లిప్సేత న చైనం హర్ష ఆవిశేత్ ॥

అధ్వా సూర్యేణ నిర్దిష్టః కీటవద్విచరేన్మహీమ్ ॥ ౪౬ ॥

మనుష్యావాసపురగ్రామాత్ నిష్క్రమ్య । ప్రారబ్ధక్షయకాలకాఙ్క్షీ । ప్రాణిమాత్రమాత్మధియాహింసన్ । కించ స్వాన్యత్ర నిర్మానశ్చేతి । బ్రహ్మభూయసే బ్రహ్మభావాయ సమర్థ్యత ఇత్యర్థః ॥ ౪౧-౪౬ ॥

యతేః సర్వకర్మపరిత్యాగః

ఆశీర్యుక్తాని కర్మాణి హింసాయుక్తాని యాని చ ।
లోకసంగ్రహయుక్తాని నైవ కుర్యాన్న కారయేత్ ॥ ౪౭ ॥

నాసచ్ఛాస్త్రేషు సజ్జేత నోపజీవేత జీవికామ్ ।
అతివాదాంస్త్యజేత్తర్కాన్ పక్షం కంచన నాశ్రయేత్ ॥ ౪౮ ॥

న శిష్యాననుబధ్నీత గ్రన్థాన్నైవాభ్యసేద్ బహూన్ ।
న వ్యాఖ్యాముపయుఞ్జీత నారమ్భానారభేత్ క్వచిత్ ॥ ౪౯ ॥

అవ్యక్తలిఙ్గోఽవ్యక్తార్థో మునిరున్మత్తబాలవత్ ।
కవిర్మూకవదాత్మానం తద్దృష్ట్యా దర్శయేన్నృణామ్ ॥ ౫౦ ॥

న కుర్యాన్న వదేత్ కించిన్న ధ్యాయేత్ సాధ్వసాధు వా ।
ఆత్మారామోఽనయా వృత్త్యా విచరేజ్జడవన్మునిః ॥ ౫౧ ॥

ఏకశ్చరేన్మహీమేతాం నిఃసఙ్గః సంయతేన్ద్రియః ।
ఆత్మక్రీడ ఆత్మరతిరాత్మవాన్ సమదర్శనః ॥ ౫౨ ॥

బుధో బాలకవత్క్రీడః కుశలో జడవచ్చరేత్ ।
వదేదున్మత్తవద్విద్వాన్ గోచర్యాం నైగమశ్చరేత్ ॥ ౫౩ ॥

క్షిప్తోఽవమానితోఽసద్భిః ప్రలబ్ధోఽసూయితోఽపి వా ।
తాడితః సంనిరుద్ధో వా వృత్త్యా వా పరితాపితః ॥ ౫౪ ॥

విష్ఠితో మూత్రితో వాజ్ఞైర్బహుధైవం ప్రకమ్పితః ।
శ్రేయస్కామః కృచ్ఛ్రగత ఆత్మనాత్మానముద్ధరేత్ ॥ ౫౫ ॥

సంమాననం పరాం హానిం యోగర్ద్ధేః కురుతే యతః ।
జనేనావమతో యోగీ యోగసిద్ధిం చ విన్దతి ॥ ౫౬ ॥

తథా చరేత వై యోగీ సతాం ధర్మమదూషయన్ ।
జనా యథావమన్యేరన్ గచ్ఛేయుర్నైవ సంగతిమ్ ॥ ౫౭ ॥

జరాయుజాణ్డజాదీనాం వాఙ్మనఃకాయకర్మభిః ।
యుక్తః కుర్వీత న ద్రోహం సర్వసఙ్గాంశ్చ వర్జయేత్ ॥ ౫౮ ॥

కామక్రోధౌ తథా దర్పలోభమోహాదయశ్చ యే ।
తాంస్తు దోషాన్ పరిత్యజ్య పరివ్రాడ్ భయవర్జితః ॥ ౫౯ ॥

తేనాపి లోకసంగ్రహార్థం కర్మ కర్తవ్యమిత్యత ఆహ- ఆశీరితి । పరైర్వాపి న కారయేత్ । యది శ్రేయోఽర్థీ మునిస్తదా నాసచ్ఛాస్త్రేష్వితి । స్వయమతివాదాంస్త్యజేత్- शिष्याननुबध्नीत । अनात्मशास्त्रोद्देशेन न व्याख्यामुपयुञ्जीत ।

नारम्भानारभेत् क्वचित् निःसंकल्पो भवेदित्यर्थः। सर्वज्ञोऽपि कविः। मुनिः ससहायः संचरेदित्यत आह- एक इति। ब्रह्मातिरिक्तयोर्याथात्म्यं बुधो बालकवत्क्रीडः सर्वार्थकुशलो जडवच्चरेत् वदेदुन्मत्तद्विद्वान् निगमार्थतत्त्वज्ञोऽपि गोचर्याम् इदमस्तु इदं मास्त्विति न प्रकटयन्तीं नैगमश्चरेत्। कालकर्मयोगतः परैः क्षिप्त इति। ब्रह्मयाथात्म्यानु-
సంమానం పరాం హానిం వా యః కురుతే స స్వకృత్యానురూపం ఫలమనుభవతి। యత ఏవమతః పరకృతపూజనతాడనాదిసహనాత్ యోగీ యోగఫలమర్హతీత్యాహ- జనేనేతి। యథా సహనాత్ యోగసిద్ధిః తథా చరేత్। స్వయం స్వధర్మాననుష్ఠానం సద్ధర్మదూషణమిత్యర్థః। సన్తః జనాః ఇతి। స్వయమసాధ్వవమతోఽపి ప్రాణిసామాన్యద్రోహీ న భవేదిత్యాహ- జరాయుజేతి। కించ ప్రాణిసామాన్యవిషయే కామక్రోధావితి॥ ౪౭-౫౯॥

యతేః అసాధారణధర్మాః

భైక్షాశనం చ మౌనిత్వం తపో ధ్యానం విశేషతః।
సమ్యగ్జ్ఞానం చ వైరాగ్యం ధర్మోఽయం భిక్షుకే మతః॥ ౬౦॥

కాషాయవాసాః సతతం ధ్యానయోగపరాయణః।
గ్రామాన్తే వృక్షమూలే వా వసేద్దేవాలయేఽపి వా।
భైక్షేణ వర్తతే నిత్యం నైకాన్నాశీ భవేత్ క్వచిత్॥ ౬౧॥

చిత్తశుద్ధిర్భవేద్యావత్ తావన్నిత్యం చరేత్ సుధీః।
తత్ర ప్రవ్రజ్య శుద్ధాత్మా సంచరేద్యత్ర కుత్రచిత్॥ ౬౨॥

బహిరన్తశ్చ సర్వత్ర సంపశ్యన్ హి జనార్ధనమ్ |
సర్వత్ర విచరన్ మౌనీ వాయువద్వీతకల్మషః || ౬౩ ||

సమదుఃఖసుఖః క్షాన్తో హస్తప్రాప్తం చ భక్షయన్ |
నిర్వైరేణ సమం పశ్యన్ ద్విజగోఽశ్వమృగాదిషు || ౬౪ ||

భావయన్ మనసా విష్ణుం పరమాత్మానమీశ్వరమ్ |
చిన్తయన్ పరమానన్దం బ్రహ్మైవాహమితి స్మరన్ || ౬౫ ||

జ్ఞాత్వైవం మనోదణ్డం ధృత్వా ఆశానివృత్తో భూత్వా ఆశామ్బరధరో భూత్వా సర్వదా మనోవాక్కాయకర్మభిః సర్వసంసారముత్సృజ్య ప్రపఞ్చావాఙ్ముఖః స్వరూపానుసంధానేన భ్రమరకీటన్యాయేన ముక్తో భవతీత్యుపనిషత్ || ౬౬ ||

యతేరసాధారణధర్మస్తు- భైక్షాశనమిత్యాది | యావచ్చిత్తశుద్ధిస్తావద్ వ్రత్యాదిః స్వాశ్రమోచితధర్మానుష్ఠానపూర్వకం వేదాన్తశ్రవణాది కృత్వా తతః సంన్యస్య సర్వత్ర చరన్ ఏకత్ర తిష్ఠన్ వా బ్రహ్మానుసంధానం కుర్యాదిత్యాహ- చిత్తేతి | ఏకత్ర స్థిరాసనో భూత్వా భావయన్నితి | స్మరన్ కాలం నయేదిత్యర్థః | ఏతావతా గ్రన్థేన యోఽర్థోఽభిహితః తజ్జ్ఞానతః అవధూతో భూత్వా స్వాతిరిక్తాస్తిత్వభ్రమముక్తో భవతీత్యాహ- జ్ఞాత్వేతి | జ్ఞాత్వైవం మనోదణ్డం ధృత్వా పరాఙ్ మనో యేన దణ్డ్యతే తత్రత్యగభిన్నబ్రహ్మ-
मनःप्रविलापनाधिकरणगोचरत्वात् स्वातिरेकेणाभासतोऽपि किंचिदस्तीति
मिथ्याशानिवृत्तो भूत्वा आशाम्बरधरोऽवधूतो भूत्वा |
स्वातिरिक्तप्रपञ्चावाङ्मुखः प्रपञ्चोऽस्ति नास्तीति विभ्रमविरलो भूत्वा

स्वरूपानुसंधानेन भ्रमरकीटन्यायेन मुक्तो भवतीति। कीटको भ्रमरं

ध्यायन् भ्रमरत्वाय कल्पते इति भगवत्पादोक्त्यनुरोधेन सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति प्रबोधसमकालं

स्वातिरिक्तभ्रममुक्तो भवतीत्यर्थः। इत्युपनिषच्छब्दः

पञ्चमोपदेशसमाप्त्यर्थः॥ ६०-६६॥

इति पञ्चमोपदेशः॥

षष्ठोपदेशः

मोक्षप्राप्त्युपायजिज्ञासा

अथ नारदः पितामहमुवाच। भगवन् तदभ्यासाद् भ्रमरकीटन्यायवत्।

तदभ्यासः कथमिति। तमाह पितामहः। सत्यवाग्ज्ञानवैराग्याभ्यां

विशिष्टदेहावशिष्टो वसेत्॥ १॥

स्वरूपानुसंधानतो मुक्तो भवतीत्युक्तम्। तदुपायबुभुत्सया पितामहं

नारदः पृच्छतीत्याह- अथेति। नारदेनैवं पृष्टो भगवान्

तत्प्रश्नमङ्गिकृत्य प्रतिवचनमाचष्टे- तमाह पितामह इति।

सर्वावस्थास्वपि सर्वप्राणिप्रियहितसत्यवाग्ज्ञानवैराग्याभ्याम्॥ १॥

विद्वच्छरीरवर्णनादिकम्

ज्ञानं शरीरम् वैराग्यं जीवनं विद्धि शान्तिदान्ती नेत्रे मनोमुखम्

बुद्धिः कला पञ्चविंशतितत्त्वान्यवयवानि अवस्था पञ्च महाभूतानि

कर्मभक्तिज्ञानवैराग्यं शाखा जाग्रत्स्वप्नसुषुप्तितुरीयाः चतुर्दश

करणानि पङ्कस्तम्भाकाराणीत्येवमपि नावमपि पङ्कं कर्णधार इव

यन्तेव गजम् स्वबुद्ध्या स्ववशीकृत्य अस्मद्यतिरिक्तं सर्वं कृतकं

नश्वरमिति मत्वा विरक्तः पुरुषः सर्वदा ब्रह्माहमिति व्याहरेन्नान्यत् किंचिद्वेदितव्यं स्वव्यतिरेकेण जीवन्मुक्तो भूत्वा वसेत्

कृतकृत्यो भवति। न नाहं ब्रह्मेति व्यवहरेत् किंतु

ब्रह्माहमस्मीत्यजस्रं जाग्रत्स्वप्नसुषुप्तिषु तुरीयावस्थां प्राप्य

तुर्यातीतत्वं व्रजेत्॥ २॥

विद्वद्देहः कीदृश इत्याकाङ्क्षायां तच्छरीरं वर्णयति- ज्ञानमिति।

अपरब्रह्मज्ञानं शरीरं तदतिरेकेणाब्रह्मप्रपञ्चे वैराग्यं जीवनं

प्राणस्वरूपं विद्धि शान्तिदान्ती नेत्रे मनो मुखं मनस्तत्त्वं

प्रत्यक्चैतन्यं मुखमित्यर्थः। बुद्धिः कला प्राणादिनामान्तषोडशकला

धीरेव कलानां बुद्धिविकल्पितत्वात् वाक्श्रोत्रकर्मज्ञानाक्षदशकं

शब्दादिपञ्चकं प्राणादिपञ्चकम् अन्तःकरणचतुष्टयमव्यक्तं चेति

पञ्चविंशतितत्त्वान्यवयवानि समष्टिजात्रत्स्वप्नसुषुप्तितुरीयातीतानाम् अवस्था

पृथिव्यादिपञ्चमहाभूतानि कर्मभक्तिज्ञानवैराग्यं शाखा

शाखास्थानीयबाहवः। पुनः जाग्रत्स्वप्नसुषुप्तितुरीयाश्चतुर्दश करणानि।

कर्मज्ञानाक्षदशकमन्तःकरणचतुष्टयं चेति चतुर्दश करणानि

अदृढपङ्कस्तम्भाकाराणीति। एवमपि एवं स्थितेऽपि नावमपि पङ्कं

पङ्कस्पृष्टनावमपि। कर्णधार इव यथा कर्णधारो नौकाचालकः

सत्पथं नयति। स्वव्यतिरेकेण न किंचिदस्ति स्वयमेव ब्रह्म

इत्यपरोक्षज्ञानात् जीवन्मुक्तो भूत्वा वसेत् कृतकृत्यो भवति। व्यवहार

दशायामपि न नाहं ब्रह्मेति व्यवहरेत् किंतु ब्रह्माहमस्मीत्यजस्रं

भावयेदित्यर्थः। ततः किमित्यत्र स्वाज्ञदृष्टिप्रसक्तजाग्रत्स्वप्नसुषुप्तिष्विति

। अहं ब्रह्मास्मीति सदानुसंधाता जाग्रदाद्यवस्थात्रये सत्यसति जीवन्मुक्तिनिर्वर्त्यतुरीयावस्थामेत्य ततस्तुर्यातीतत्वं विदेहमुक्तत्वं भजेदित्यर्थः ॥ २ ॥

तुर्यातीतत्वप्राप्त्युपायः

दिवं जाग्रन्नक्तं स्वप्नं सुषुप्तमर्धरात्रं गतमिति। एकावस्थायां चतस्रोऽवस्थाः। एकैककरणाधीनानां चतुर्दशकरणानां व्यापाराश्चक्षुरादीनाम्। चक्षुषो रूपग्रहणम् श्रोत्रयोः शब्दग्रहणम् जिह्वाया

रसास्वादनम् घ्राणस्य गन्धग्रहणम् वचसो वाग्व्यापारः पाणेरादानम् पादयोः संचारः पायोरुत्सर्गः उपस्थस्यानन्दग्रहणम् त्वचः स्पर्शग्रहणम्। तदधीना च विषयग्रहणा बुद्धिः। बुद्ध्या बुध्यति। चित्तेन चेतयति। अहंकारेणाहंकरोति। विसृज्य जीव एतान् देहाभिमानेन जीवो भवति। गृहाभिमानेन गृहस्थ इव शरीरे जीवः संचरति। प्राग्दले पुण्यावृत्तिराग्नेययां निद्रालस्यौ दक्षिणायां क्रौर्यबुद्धिर्नैर्-
శాన్తిః ఈశాన్యే జ్ఞానం కర్ణికాయాం వైరాగ్యం కేసరేష్వాత్మచిన్తా ఇత్యేవం వక్త్రం జ్ఞాత్వా ॥ ३ ॥

తురీయాతీతం కిమ్? తదాప్త్యుపాయః కః? ఇత్యత ఆహ- దివమిత్యాది। తుర్యాతీతే బ్రహ్మణి స్వాజ్ఞైర్గుణసామ్యాత్మికా తుర్యావస్థా వికల్పితా। తత్ర తుర్యాతీతమేవ తదసఙ్గతుర్యవత్ భాసతే। తత్ర తురీయే దివా నక్తం వికల్పితమ్। తత్ర దివం దివా జాగ్రత్ స్వప్నం స్వప్నః నక్తమ్ అర్ధరాత్రమేవ సుషుప్తభావం

గతమిత్యేవమవస్థాత్రయం నిష్పన్నమ్ । తత్రైకైకావస్థాయాం చతస్రోఽవస్థాః పశ్చాత్ ప్రతిపాద్యన్తే । తదనురోధేన మన ఆద్యేకైకకరణాధీనానాం వాగాదిచతుర్దశకరణానాం చక్షురాదీనాం వ్యాపారా ఉచ్యన్తే । చక్షుషో రూపగ్రహణమ్ ఇత్యాద్యహంకారేణాహంకారోతీత్యన్తమ్ । ఏతాన్ జీవో విసృజ్య విశేషేణ సృష్ట్వా తత్సంఘాతదేహాభిమానేన తుర్యచైతన్యమేవ జీవభావమాపన్నవత్ భవతి । శరీరే తదవచ్ఛిన్నాష్టదలాఞ్చితహృదయకమలే తత్రత్యదలేషు ప్రాగాదిక్రమేణ గృహాభిమానేన గృహస్థ ఇవ జీవః సంచరతి । తత్ర ప్రాగాద్యష్టదలేషు పుణ్యాదివృత్తివిశిష్టో భూత్వా ఈశాన్యదలం ప్రవిశతో వస్తుజ్ఞానం కర్ణికాసంచారతః స్వాతిరిక్తప్రపఞ్చవైరాగ్యమేత్య తత్కేసర-
चैतन्यवक्त्रं स्वरूपं ज्ञात्वा विद्वान् ज्ञानसमकालं तुर्यातीतब्रह्ममात्रमवशिष्यते ॥ ३ ॥

तुर्यातीतस्वरूपम्

जीवदवस्था प्रथमं जाग्रद् द्वितीयं स्वप्नं तृतीयं सुषुप्तं चतुर्थं तुरीयं चतुर्भिर्विरहितं तुरीयातीतम् । विश्वतैजसप्राज्ञतटस्थभेदैरेक एव । एको देवः साक्षी निर्गुणश्च तद् ब्रह्माहमिति व्याहरेत् । नो चेज्जाग्रदवस्थायां जाग्रदादिचतस्रोऽवस्थाः स्वप्ने स्वप्नादिचतस्रोऽवस्थाः सुषुप्ते सुषुप्त्यादिचतस्रोऽवस्थाः तुरीये तुरीयादिचतस्रोऽवस्थाः । न त्वेवं तुर्यातीतस्य निर्गुणस्य । स्थूलसूक्ष्मकारणरूपैर्विश्वतैजसप्राज्ञेश्वरैः सर्वावस्थासु साक्षी त्वेक एवावतिष्ठते । उत तटस्थो द्रष्टा । तटस्थो न द्रष्टा । द्रष्टृत्वान्न द्रष्टैव । कर्तृत्वभोक्तृत्वाहंकारादिभिः स्पृष्टो जीवः । जीवेतरो न स्पृष्टः । जीवोऽपि न स्पृष्ट इति चेन्न । जीवाभिमानेन क्षेत्राभिमानः शरीराभिमानेन जीवत्वम् । जीवत्वं

घटाकाशमाकाशवद्व्यवधानोऽस्ति। व्यवधानवशादेव हंसः सोऽहमिति मन्त्रेणोच्छ्वासनिश्वासव्यपदेशेनानुसंधानं करोति। एवं विज्ञाय शरीराभिमानं त्यजेन्न शरीराभिमानी भवति। स एव ब्रह्मेत्युच्यते॥ ४॥

कथं पुनस्तुर्यातीतस्वरूपमित्यत आह- जीववदवस्थेति। जीववदवस्थासु जीवाधिष्ठितावस्थाचतुष्टये प्रथमावस्था जाग्रत् द्वितीयं स्वप्नावस्था तृतीयं सुषुप्त्यवस्था चतुर्थं तुर्यावस्था भवति यज्जाग्रदादिचतुरवस्था-विरहितं तुर्यातीतं तत् तुर्यातीतसिद्धेः जाग्रदाद्यवस्थाचतुष्टयापह्नव-पूर्वकत्वात् स्वाज्ञादिदृष्टिमोहे सत्यसति तुर्यातीतं निष्प्रतियोगिकस्वमात्र-मवशिष्यत इत्यर्थः। एकस्यैवाअत्मनो जाग्रदाद्यवस्थायोगात् स विश्वादि-भेदविशिष्टो भवति न स्वतः। स्वतस्त्वेक एव। तज्ज्ञानात्तद्भावापत्तिः स्यादित्याह- विश्वेति। जाग्रदाद्यवस्थायोगप्रभवविश्वतैजसप्राज्ञ-तटस्थभेदैः व्यवहृत आत्मा एक एव। एको देवः साक्षी निर्गुणश्च एक एव स्वप्रकाशचिद्धातुः देवः स्वसाक्ष्यगुणत्रय-నిష్ప్రతియోగికనిర్గుణత్వఖ్యాప-నార్థః। యదేవం నిష్ప్రతియోగికనిర్గుణం తద్ బ్రహ్మాహమితి వ్యాహరేత్। తత్ స్వమాత్రమిత్యనుసంధానం కుర్యాత్। తతస్తద్భావాపత్తిః స్యాదిత్యర్థః। పక్షాన్తరమాహ- నో చేదితి। జాగ్రదాద్యవస్థాచతుష్టయకలనావిరలం తుర్యాతీతమితి మన్తవ్యమ్। నో చేత్ యత్రావస్థాచతుష్టయప్రవిభక్తజాగ్రజ్జాగ్రదాది-तुर्यतुर्यांशविभातं तुर्यतुर्यं तुर्यातीतं ब्रह्म नेतरत्। तुर्यातीतस्य निर्गुणस्य निष्प्रतियोगिकतुर्यतुर्यस्य विभागकलनावैरल्यात् तस्यैव स्थूलादियोगतो विश्वादित्वं सर्वसाक्षित्वं सर्वकलनास्पृष्टत्वं चाह-स्थूलेति। साक्षी द्रष्टा। उत यद्वा तटस्थ ईश्वर इति चेत् तटस्थो न द्रष्टा साक्षी भवितुमर्हति तटस्थस्य बीजोपाधिकेश्वरतया दृष्टत्वात्। अतोऽयं न द्रष्टैव

। तथाप्ययं कर्तृत्वाद्यभिमतिविरल इत्यर्थः । नो चेत् जीव एव द्रष्टा
भवितुमर्हतीत्यत आह- कर्तृत्वेति । कर्तृत्वादिकलनया स्पृष्टो जीवः ।
साक्षी तु तदस्पृष्टः तस्य सर्वत्र आत्मात्मीयाभिमतिवैरल्यात्
तयोर्महदस्त्यन्तरमित्याह- जीवत्वमिति । घटाकाशमहाकाशवत्
व्यवधानोऽस्तीति जीवसाक्षिणोरित्यर्थः । जीवो जीवाभिमतिमुत्सृज्य सर्वसाक्ष्यस्मीति
ज्ञानात् ब्रह्मैव भवतीत्याह- व्यवधानेति ।
जीवसाक्षिणोर्व्यवधानवशात् जीवः उच्छ्वासनिश्वासच्छलेन योऽहं
स्वाज्ञदशायां जीवभावं गतः स्वज्ञानेन स्वाज्ञानापाये सोऽहं
सर्वसाक्षी स्यां वस्तुतस्तु परमार्थदृष्ट्या जीवत्वसाक्षित्वादि-
తన్మాత్రేణావశిష్యత ఇత్యేవం జీవో జ్ఞాత్వా బ్రహ్మైవ భవతీత్యాహ- ఏవమితి ।
యావద్దేహాదావాత్మాత్మీయాభిమతిస్తావజ్జీవత్వమ్ యదాయం
దేహాదావాత్మాత్మీయాభిమతిం నిఃశేషం త్యజతి తదా స ఏవ బ్రహ్మేత్యత్ర న వివాద
ఇత్యర్థః ॥ ४ ॥

అసచ్చర్యాత్యాగః సచ్చర్యానుష్ఠానం చ

త్యక్తసఙ్గో జితక్రోధో లఘ్వాహారో జితేన్ద్రియః ।
పిధాయ బుద్ధ్యా ద్వారాణి మనో ధ్యానే నివేశయేత్ ॥ ५ ॥

శూన్యేష్వేవావకాశేషు గుహాసు చ వనేషు చ ।
నిత్యయుక్తః సదా యోగీ ధ్యానం సమ్యగుపక్రమేత్ ॥ ६ ॥

ఆతిథ్యశ్రాద్ధయజ్ఞేషు దేవయాత్రోత్సవేషు చ ।
మహాజనేషు సిద్ధ్యర్థీ న గచ్ఛేద్యోగవిత్ క్వచిత్ ॥ ७ ॥

యథైనమవమన్యన్తే జనాః పరిభవన్తి చ ।
తథా యుక్తశ్చరేద్యోగీ సతాం వర్త్మ న దూషయేత్ ॥ ౮ ॥

వాగ్దణ్డః కర్మదణ్డశ్చ మనోదణ్డశ్చ తే త్రయః ।
యస్యైతే నియతా దణ్డాః స త్రిదణ్డీ మహాయతిః ॥ ౯ ॥

విధూమే చ ప్రశాన్తాగ్నౌ యస్తు మాధూకరం చరేత్ ।
గృహే చ విప్రముఖ్యానాం యతిః సర్వోత్తమః స్మృతః ॥ ౧౦ ॥

దణ్డభిక్షాం చ యః కుర్యాత్ స్వధర్మే వ్యసనం వినా ।
యస్తిష్ఠతి న వైరాగ్యం యాతి నీచయతిర్హి సః ॥ ౧౧ ॥

యస్మిన్ గృహే విశేషేణ లభేద్భిక్షాం చ వాసనాత్ ।
తత్ర నో యాతి యో భూయః స యతిర్నేతరః స్మృతః ॥ ౧౨ ॥

యః శరీరేన్ద్రియాదిభ్యో విహీనం సర్వసాక్షిణమ్ ।
పారమార్థికవిజ్ఞానం సుఖాత్మానం స్వయంప్రభమ్ ॥ ౧౩ ॥

పరతత్త్వం విజానాతి సోఽతి వర్ణాశ్రమీ భవేత్ ।
వర్ణాశ్రమాదయో దేహే మాయయా పరికల్పితాః ॥ ౧౪ ॥

నాత్మనో బోధరూపస్య మమ తే సన్తి సర్వదా ।
ఇతి యో వేద వేదాన్తైః సోఽతివర్ణాశ్రమీ భవేత్ ॥ ౧౫ ॥

యస్య వర్ణాశ్రమాచారో గలితః స్వాత్మదర్శనాత్ ।
స వర్ణానాశ్రమాన్ సర్వానతీత్య స్వాత్మని స్థితః ॥ ౧౬ ॥

యోఽతీత్య స్వాశ్రమాన్ వర్ణానాత్మన్యేవ స్థితః పుమాన్ ।
సోఽతివర్ణాశ్రమీ ప్రోక్తః సర్వవేదార్థవేదిభిః ॥ ౧౭ ॥

తస్మాదన్యగతా వర్ణా ఆశ్రమా అపి నారద ।
ఆత్మన్యారోపితాః సర్వే భ్రాన్త్యా తే నాత్మవేదినా ॥ ౧౮ ॥

న విధిర్న నిషేధశ్చ న వర్జ్యావర్జ్యకల్పనా ।
బ్రహ్మవిజ్ఞానినామస్తి తథా నాన్యచ్చ నారద ॥ ౧౯ ॥

జీవన్ముక్తయతీనామసచ్చర్యాత్యాగపూర్వకం సచ్చర్యాసర్వస్వమనుక్రామతి-
త్యక్త్వేత్యాదినా । పిధాయ బుద్ధ్యా ద్వారాణి విషయోపలబ్ధిద్వారాణి ధియా పిధాయ
బ్రహ్మధ్యానే మనో నివేశయేత్ ఇత్యర్థః । ధ్యానస్థలం నిగమయతి-
శూన్యేష్వితి । తస్యాగమ్యప్రదేశమాహ- ఆతిథ్యేతి । తస్య త్రిదణ్డమాహ-
వాగితి । మౌనానశనప్రాణాయామైః । వాగ్దణ్డ ఇత్యాది । యతేర్భిక్షావిధిః
తద్విపర్యయే బాధకంచోచ్యతే- విధూమ ఇతి ।
ముఖ్యగౌణావధూతలక్షణమాహ- య ఇతి । స్వయంప్రభం
స్వయంప్రాకశచిద్ధాతుమ్ ॥ ౫-౧౯ ॥

వివిదిషోః శ్రవణాదివిధిః

విరజ్య సర్వభూతేభ్య ఆ విరిఞ్చిపదాదపి ।

ఘృణాం విపాట్య సర్వస్మిన్ పుత్రవిత్తాదికేష్వపి ॥ ౨౦ ॥

శ్రద్ధాలుర్ముక్తిమార్గేషు వేదాన్తజ్ఞానలిప్సయా ।
ఉపాయనకరో భత్వా గురుం బ్రహ్మవిదం వ్రజేత్ ॥ ౨౧ ॥

సేవాభిః పరితోష్యైనం చిరకాలం సమాహితః ।
సదా వేదాన్తవాక్యార్థం శృణుయాత్ సుసమాహితః ॥ ౨౨ ॥

నిర్మమో నిరహంకారః సర్వసఙ్గవివర్జితః ।
సదా శాన్త్యాదియుక్తః సన్నాత్మన్యాత్మానమీక్షతే ॥ ౨౩ ॥

సంసారదోషదృష్ట్యైవ విరక్తిర్జాయతే సదా ।
విరక్తస్య తు సంసారాత్ సంన్యాసః స్యాన్న సంశయః ॥ ౨౪ ॥

ముముక్షుః పరహంసాఖ్యః సాక్షాన్మోక్షైకసాధనమ్ ।
అభ్యసేద్ బ్రహ్మవిజ్ఞానం వేదాన్తశ్రవణాదినా ॥ ౨౫ ॥

బ్రహ్మవిజ్ఞానలాభాయ పరహంససమాహ్వయః ।
శాన్తిదాన్త్యాదిభిః సర్వైః సాధనైః సహితో భవేత్ ॥ ౨౬ ॥

వేదాన్తాభ్యాసనిరతః శాన్తో దాన్తో జితేన్ద్రియః ।
నిర్భయో నిర్మమో నిత్యం నిర్ద్వన్ద్వో నిష్పరిగ్రహః ॥ ౨౭ ॥

జీర్ణకౌపీనవాసాః స్యాన్ముణ్డీ నగ్నోఽథవా భవేత్ ।
ప్రాజ్ఞో వేదాన్తవిద్యోగీ నిర్మమో నిరహంకృతిః ॥ ౨౮ ॥

మిత్రాదిషు సమో మైత్రః సమస్తేష్వేవ జన్తుషు |
ఏకో జ్ఞానీ ప్రశాన్తాత్మా స సంతరతి నేతరః || ౨౯ ||

గురూణాం చ హితే యుక్తస్తత్ర సంవత్సరం వసేత్ |
నియమేష్వప్రమత్తస్తు యమేషు చ సదా భవేత్ || ౩౦ ||

ప్రాప్య చాన్తే తతశ్చైవ జ్ఞానయోగమనుత్తమమ్ |
అవిరోధేన ధర్మస్య సంచరేత్ పృథివీమిమామ్ || ౩౧ ||

తతః సంవత్సరస్యాన్తే జ్ఞానయోగమనుత్తమమ్ |
ఆశ్రమత్రయముత్సృజ్య ప్రాప్తశ్చ పరమాశ్రమమ్ || ౩౨ ||

అనుజ్ఞాప్య గురూంశ్చైవ చరేద్ధి పృథివీమిమామ్ |
త్యక్తసఙ్గో జితక్రోధో లఘ్వాహారో జితేన్ద్రియః || ౩౩ ||

ద్వావిమౌ న విరాజేతే విపరీతేన కర్మణా |
నిరారమ్భో గృహస్థశ్చ కార్యవాంశ్చైవ భిక్షుకః || ౩౪ ||

మాద్యతి ప్రమదాం దృష్ట్వా సురామ్ పీత్వా చ మాద్యతి |
తస్మాద్ దృష్టివిషాం నారీం దూరతః పరివర్జయేత్ || ౩౫ ||

సంభాసణం సహ స్త్రీభిరాలాపప్రేషణం తథా |
నృత్తం గానం సహాసం చ పరివాదాంశ్చ వర్జయేత్ || ౩౬ ||

న స్నానం న జపః పూజా న హోమో నైవ సాధనమ్ |
నాగ్నికార్యాది కార్యం చ నైతస్యాస్తీహ నారద || ౩౭ ||

నార్చనం పితృకార్యం చ తీర్థయాత్రా వ్రతాని చ |
ధర్మాధర్మాదికం నాస్తి న విధిర్లౌకికీ క్రియా || ౩౮ ||

సంత్యజేత్ సర్వకర్మాణి లోకాచారం చ సర్వశః |
కృమికీటపతఙ్గాంశ్చ తథా యోగీ వనస్పతీన్ || ౩౯ ||

న నాశయేద్ బుధో జీవాన్ పరమార్థమతిర్యతిః |
నిత్యమన్తర్ముఖః స్వచ్ఛః ప్రశాన్తాత్మా స్వపూర్ణధీః || ౪౦ ||

అన్తఃసఙ్గపరిత్యాగీ లోకే విహర నారద |
నారాజకే జనపదే చరత్యేకచరో మునిః || ౪౧ ||

నిఃస్తుతిర్నిర్నమస్కారో నిఃస్వధాకార ఏవ చ |
చలాచలనికేతశ్చ యతిర్యాదృచ్ఛికో భవేత్ || ౪౨ ||

ఇత్యుపనిషత్ ||

వివిదిషోః శ్రవణవిధిమాహ- విరజ్యేతి |
సార్వభౌమాద్యావిరిఞ్చిత్వప్రదకర్మ-ఫలాత్ సర్వభూతేభ్యో నివర్త్య
ప్రయోజనాదపి విరజ్య విరతిమేత్య సంన్యసేదిత్యర్థః సంన్యస్య శ్రవణం కుర్యాత్
ఇతి స్మృతేః | స్వాభిమతగురునికటే సంశయాదిపఞ్చదోషనివృత్త్యన్తం
సమాహితకరణగ్రామో భూత్వా సర్వవేదాన్తశ్రవణమేవ కుర్యాదిత్యర్థః

ఆవృత్తిరసకృదుపదేశాత్ ఇతి వైయాసికసూత్రానురోధేన

అహం బ్రహ్మేతి వాక్యార్థబోధో యావద్ దృఢీభవేత్ ।
శమాదిసహితస్తావదభ్యసేచ్ఛ్రవణాదికమ్ ॥

ఇతి భగవత్పాదాచార్యోక్తేః । తతః కిమిత్యత్రాహ- దారాదిస్వదేహాన్తకలనాసు నిర్మమ ఇతి । యతః శ్రవణాదిజన్యజ్ఞానం కైవల్యప్రాపకమ్ అత ఏవ శ్రవణాది-ప్రతిబన్ధకకార్యం సంన్యస్య శాన్త్యాదిసహితో భూత్వా జ్ఞానఫలసిద్ధి-పర్యన్తం శ్రవణమేవ కుర్యాదిత్యాహ- సంసారేతి । కుటీచకాద్యాశ్రమత్రయ-ముత్సృజ్య పరమాశ్రమం పరమహంసాశ్రమమిత్యర్థః ॥ తతః అనుజ్ఞాప్యేతి ॥ కీదృశో భూత్వేత్యత్రాహ- विभ्रमकरस्त्रीसंलापादिविमुखो भवेदित्याह- माद्यतीति । यस्मादेवं तस्मात् । परमार्थदृष्टेः स्नानजपादिकर्तव्यता नास्तीत्याह- नेति । लोकसंग्रहार्थं कर्म कर्तव्यमित्यत्राह- संत्यजेदिति । चरस्थिरहिंसां न कुर्यादित्याह- कृमीति । चलं शून्यागारादि क्षयिष्णुत्वात् अचलं पर्वतादिः तस्य स्थिरत्वात् । यादृच्छिको भवेत् यदृच्छालाभसंतुष्टो भवेत् । न हि यथेच्छाचरणं भवितुमर्हति प्रवृत्तिनिवृत्तिसंकल्पासंभवात् । इत्युपनिषच्छब्दः षष्ठोपदेशसमाप्त्यर्थः ॥ २०-४२ ॥

इति षष्ठोपदेशः ॥

## सप्तमोपदेशः

### यति नियमाः

अथ यतेर्नियमः कथमिति पृष्टो नारदं पितामहः पुरस्कृत्योवाच।
विरक्तः सन् यो वर्षासु ध्रुवशीलोऽष्टौ मांस्येकाकी चरेन्नैकत्र निवसेत्।

भिक्षुर्भयात् सारङ्गवदेकत्र न तिष्ठेत्। स्वगमनविरोधग्रहणं न कुर्यात्।
हस्ताभ्यां नद्युत्तरणं न कुर्यात्। न वृक्षारोहणमपि। न देवोत्सव-
సర్వం త్యక్త్వా మధుకరవృత్త్యాహారమాహరన్ కృశో భూత్వా
మేదోవృద్ధిమకుర్వన్ ఆజ్యం రుధిరమివ త్యజేత్। ఏకత్రాన్నం పలలమివ
గన్ధలేపనమశుద్ధలేపనమివ క్షారమన్త్యజమివ వస్త్రముచ్ఛిష్టపాత్రమివ
అభ్యఙ్గం స్త్రీసఙ్గమివ మిత్రాహ్లాదనం మూత్రమివ స్పృహాం గోమాంసమివ
జ్ఞాతచరదేశం చణ్డాలవాటికామివ స్త్రియమహిమివ సువర్ణం కాలకూటమివ
సభాస్థలం శ్మశానస్థలమివ రాజధానీం కుమ్భీపాకమివ
శవపిణ్డవదేకత్రాన్నమ్। దేహాన్తరదర్శనం ప్రపఞ్చవృత్తిం పరిత్యజ్య
స్వదేశముత్సృజ్య జ్ఞాతచరదేశం విహాయ విస్మృతపదార్థపునఃప్రాప్తిహర్ష
ఇవ స్వమానన్దమనుస్మరన్ స్వశరీరాభిమానదేశవిస్మరణం కృత్వా
స్వశరీరం శవమివ హేయముపగమ్య కారాగృహవినిర్ముక్తచోరవత్
పుత్రాప్తబన్ధుభవ-స్థలం విహాయ దూరతో వసేత్। అయత్నేన ప్రాప్తమాహరన్
బ్రహ్మప్రణవధ్యానాను-సంధానపరో భూత్వా సర్వకర్మవినిర్ముక్తః
కామక్రోధలోభమోహమద-మాత్సర్యాదికం దగ్ధ్వా త్రిగుణాతీతః
షడూర్మిరహితః షడ్భావవికార-శూన్యః సత్యవాక్ శుచిః అద్రోహీ
గ్రామైకరాత్రమ్ పత్తనే పఞ్చరాత్రమ్ క్షేత్రే పఞ్చరాత్రమ్ తీర్థే పఞ్చరాత్రమ్
అనికేతః స్థిరమతిః నానృతవాదీ గిరికన్దరేషు వసేదేక ఏవ వా ద్వౌ వా చరేత్
గ్రామం త్రిభిః నగరం [ఉ ఉ ౧ : చతుః గ్రామమ్]
చతుర్భిర్నగరమిత్యేకశ్చరేద్భిక్షుః। చతుర్దశకరణానాం న తత్రావకాశం

దద్యాత్ । అవిచ్ఛిన్నజ్ఞానాద్వైరాగ్యసంపత్తిమనుభూయ మత్తో న కశ్చిన్నాన్యో వ్యతిరిక్త ఇత్యాత్మన్యాలోచ్య సర్వతః స్వరూపమేవ పశ్యన్

జీవన్ముక్తిమవాప్య ప్రారబ్ధప్రతిభాసనాశపర్యన్తం చతుర్విధం స్వరూపం

జ్ఞాత్వా దేహపతనపర్యన్తం స్వరూపానుసంధానేన వసేత్ ॥ ౧ ॥

కుటీచకాదిచర్యా బహుధా శ్రుత్వాపి పునర్విశేషబుభుత్సయా నారదేన పృష్టః

పితామహః ప్రసక్తానుప్రసక్త్యా పురోక్తమనుక్తం చ సర్వముపదిష్టవానిత్యాహ-

विरक्त इति। यदि कृतश्रवणादिसाधनस्तदनधिकारी वा अष्टौ मांस्येकाकी

ग्रामैकरात्रमित्युक्तरीत्या संचरेत्। चातुर्मास्ये तु एकत्र निवसेत् भिक्षुः भयात्

प्राणिबाधा स्यादिति भिया वर्षास्वेकत्र निवसेदित्यर्थः। चातुर्मास्यानन्तरं

सारङ्गवदेकत्र न तिष्ठेत् कदापि स्वगमनविरोध-ग्रहणमत्रैव

कतिचिदहानि वसत्विति प्रार्थनाङ्गीकारं न कुर्यात्। यदि दृढाङ्गः

गन्धलेपनमिति। ब्रह्मातिरिक्तधिया न देहान्तरदर्शनमिति। यत्र

स्वशरीराभिमानिनो वर्तन्ते तत्र स्वशरीराभिमानदेशविस्मरणम्। षोडश-

స్వాతిరిక్త-సర్వకర్మనిర్ముక్తః యత్ర కుత్రాప్యనికేతః సంచారకాలే ఏక ఏవ

చరేత్ । చాతుర్మాస్యాదిప్రసక్తౌ గ్రామం ద్వౌ వా చరేత్ త్రిభిః చతుర్భిర్వా నగరం

చరేత్ విశ్వరూపయాత్రాచ్ఛలేన యతిరేక ఏవ చరేదిత్యర్థః । భిక్షుః

వాగాదిచతుర్దశకరణానాం స్వాతిరిక్తాస్తిత్వభ్రమముత్సృజ్య । సర్వత ఇతి ।

విశ్వవిరాడోత్రాదిద్వితుర్యావికల్పాన్తం తద్గతహేయాంశాపాయసిద్ధమాత్రాది-

कुटीचकादीनां स्नानादिनियमेषु विशेषः

त्रिषवणस्नानं कुटीचकस्य बहूदकस्य द्विवारम् हंसस्यैकवारम्

परमहंसस्य मानसस्नानम् तुर्यातीतस्य भस्मस्नानम् अवधूतस्य

वायव्यस्नानम् ॥ २ ॥

